# Shri Mahakala Kakaradi Ashtottarashatanama Stotram

# श्रीमहाकालककाराद्यष्टोत्तरशतनामस्तोत्रम्

## Document Information

Text title : Mahakala KakarAdi Ashtottarashatanama Stotram

File name : mahAkAlakakArAdyaShTottarashatanAmastotram.itx

Category : shiva, aShTottarashatanAma

Location : doc_shiva

Transliterated by : NA

Proofread by : NA, PSA Easwaran psaeaswaran at gmail.com

Description/comments : See corresponding Namavali

Latest update : September 28, 2019

Send corrections to : sanskrit@cheerful.com

This text is prepared by volunteers and is to be used for personal study and research. The file is not to be copied or reposted without permission, for promotion of any website or individuals or for commercial purpose. Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanskript**.

**Please help to maintain respect for volunteer spirit.**

September 28, 2019

*sanskritdocuments.org*

# श्रीमहाकालककाराद्यष्टोत्तरशतनामस्तोत्रम्

कैलासशिखरे रम्ये सुखासीनं जगद्गुरुम् ।
प्रणम्य परया भक्त्या पार्वती परिपृच्छति ॥ १ ॥

श्रीपार्वत्युवाच -
त्वत्तः श्रुतं पुरा देव भैरवस्य महात्मनः ।
नाम्नामष्टोत्तरशतं ककारादिमभीष्टदम् ॥ २ ॥

गुह्याद्गुह्यतरं गुह्यं सर्वाभीष्टार्थसाधकम् ।
तन्मे वदस्व देवेश! यद्यहं तव वल्लभा ॥ ३ ॥

श्रीशिवोवाच -
लक्षवारसहस्राणि वारिताऽसि पुनः पुनः ।
स्त्रीस्वभावान्महादेवि! पुनस्तत्त्वं तु पृच्छसि ॥ ४ ॥

रहस्यातिरहस्यं च गोप्याद्गोप्यं महत्तरम् ।
तत्ते वक्ष्यामि देवेशि! स्नेहात्तव शुचिस्मिते ॥ ५ ॥

कूर्चयुग्मं महाकाल प्रसीदेति पदद्वयम् ।
लज्जायुग्मं वह्निजाया राजराजेश्वरो महान् ॥ ६ ॥

मन्त्रः -
“हूं हूं महाकाल ! प्रसीद प्रसीद ह्रीं ह्रीं स्वाहा ।”
मन्त्रग्रहणमात्रेण भवेत्सत्यं महाकविः ।
गद्यपद्यमयी वाणी गङ्गा निर्झरणी यथा ॥

विनियोगः -
ॐ अस्य श्रीराजराजेश्वर श्रीमहाकाल
ककाराद्यष्टोत्तरशतनाममालामन्त्रस्य श्रीदक्षिणाकालिका ऋषिः,
विराट् छन्दः, श्रीमहाकालः देवता, हूं बीजं, ह्रीं शक्तिः,
स्वाहा कीलकं, सर्वार्थसाधने पाठे विनियोगः ॥

ऋष्यादिन्यासः -
श्रीदक्षिणाकालिका ऋषये नमः शिरसि । विराट् छन्दसे नमः मुखे ।
श्रीमहाकाल देवतायै नमः हृदि । ह्रूं बीजाय नमः गुह्ये ।
ह्रीं शक्तये नमः पादयोः । स्वाहा कीलकाय नमः नाभौ ।
विनियोगाय नमः सर्वाङ्गे ॥

करन्यासः एवं हृदयादिन्यासः -
ॐ ह्रां अङ्गुष्ठाभ्यां नमः, हृदयाय नमः ।
ॐ ह्रीं तर्जनीभ्यां नमः, शिरसे स्वाहा ।
ॐ ह्रूं मध्यमाभ्यां नमः, शिखायै वषट् ।
ॐ ह्रैं अनामिकाभ्यां नमः, कवचाय हुम् ।
ॐ ह्रौं कनिष्ठिकाभ्यां नमः, नेत्रत्रयाय वौषट् ।
ॐ ह्रः करतलकरपृष्ठाभ्यां नमः, अस्त्राय फट् ॥

ध्यानम् -
कोटि कालानलाभासं चतुर्भुजं त्रिलोचनम् ।
श्मशानाष्टकमध्यस्थं मुण्डाष्टकविभूषितम् ॥

पञ्चप्रेतस्थितं देवं त्रिशूलं डमरुं तथा ।
खड्गं च खर्परं चैव वामदक्षिणयोगतः ॥

विश्वतं सुन्दरं देहं श्मशानभस्मभूषितम् ।
नानाशवैः क्रीडमानं कालिकाहृदयस्थितम् ॥

लालयन्तं रतासक्तं घोरचुम्बनतत्परम् ।
गृध्रगोमायुसंयुक्तं फेरवीगणसंयुतम् ॥

जटापटल शोभाढ्यं सर्वशून्यालयस्थितम् ।
सर्वशून्यमुण्डभूषं प्रसन्नवदनं शिवम् ॥

अथ स्तोत्रम् ।
ॐ कूं कूं कूं कूं शब्दरतः क्रूं क्रूं क्रूं क्रूं परायणः ।
कविकण्ठस्थितः कै ह्रीं ह्रूं कं कं कवि पूर्णदः ॥ १ ॥

कपालकज्जलसमः कज्जलप्रियतोषणः ।
कपालमालाऽऽभरणः कपालकरभूषणः ॥ २ ॥

कपालपात्रसन्तुष्टः कपालार्घ्यपरायणः ।

कदम्बपुष्पसम्पूज्यः कदम्बपुष्पहोमदः ॥ ३ ॥

कुलप्रियः कुलधरः कुलाधारः कुलेश्वरः ।
कौलव्रतधरः कर्म कामकेलिप्रियः क्रतुः ॥ ४ ॥

कलह ह्रींमन्त्रवर्णः कलह ह्रींस्वरूपिणः ।
कङ्कालभैरवो देवः कङ्कालभैरवेश्वरः ॥ ५ ॥

कादम्बरीपानरतः तथा कादम्बरीकलः ।
करालभैरवानन्दः करालभैरवेश्वरः ॥ ६ ॥

करालः कलनाधारः कपर्दीशवरप्रदः ।
करवीरप्रियप्राणः करवीरप्रपूजनः ॥ ७ ॥

कलाधारः कालकण्ठः कूटस्थः कोटराश्रयः ।
करुणः करुणावासः कौतुकीकालिकापतिः ॥ ८ ॥

कठिनः कोमलः कर्णः कृत्तिवासकलेवरः ।
कलानिधिः कीर्तिनाथः कामेन हृदयङ्गमः ॥ ९ ॥

कृष्णः काशीपतिः कौलः कुलचूडामणिः कुलः ।
कालाञ्जनसमाकारः कालाञ्जननिवासनः ॥ १० ॥

कौपीनधारी कैवर्तः कृतवीर्यः कपिध्वजः ।
कामरूपः कामगतिः कामयोगपरायणः ॥ ११ ॥

कामसम्मर्दनरतः कामगृहनिवासनः ।
कालिकारमणः कालिनायकः कालिकाप्रियः ॥ १२ ॥

कालीशः कालिकाकान्तः कल्पद्रुमलतामतः ।
कुलटालापमध्यस्थः कुलटासङ्गतोषितः ॥ १३ ॥

कुलटाचुम्बनोद्युक्तः कुलटाकुचमर्दनः ।
केरलाचारनिपुणः केरलेन्द्रगृहस्थितः ॥ १४ ॥

कस्तूरीतिलकानन्दः कस्तूरीतिलकप्रियः ।
कस्तूरीहोमसन्तुष्टः कस्तूरीतर्पणोद्यतः ॥ १५ ॥

कस्तूरीमार्जनोद्युक्तः कस्तूरीकुण्डमज्जनः ।
कामिनीपुष्पनिलयः कामिनीपुष्पभूषणः ॥ १६ ॥

कामिनीकुण्डसंलग्नः कामिनीकुण्डमध्यगः ।
कामिनीमानसाराध्यः कामिनीमानतोषितः ॥ १७ ॥

काममञ्जीररणितः कामदेवप्रियातुरः ।
कर्पूरामोदरुच्चिरः कर्पूरामोदधारणः ॥ १८ ॥

कर्पूरमालाऽऽभरणः कूर्परार्णवमध्यगः ।
क्रकसः क्रकसाराध्यः कलापपुष्परूपकः ॥ १९ ॥

कुशलः कुशलाकर्णी कुक्कुरासङ्गतोषितः ।
कुक्कुरालयमध्यस्थः काश्मीरकरवीरभृत् ॥ २० ॥

कूटस्थः क्रूरदृष्टिश्च केशवासक्तमानसः ।
कुम्भीनसविभूषाढ्यः कुम्भीनसवधोद्यतः ॥ २१ ॥

फलश्रुतिः -
नाम्नामष्टोत्तरशतं स्तुत्वा महाकालदेवम् ।
ककारादि जगद्वन्द्यं गोपनीयं प्रयत्नतः ॥ १ ॥

य इदं पठते प्रातः त्रिसन्ध्यं वा पठेन्नरः ।
वाञ्छितं समवाप्नोति नात्र कार्या विचारणा ॥ २ ॥

लभते ह्यचलां लक्ष्मीं देवानामपि दुर्लभाम् ।
पूजाकाले जपान्ते च पठनीयं विशेषतः ॥ ३ ॥

यः पठेत्साधकाधीशः कालीरूपो हि वर्षतः ।
पठेद्वा पाठयेद्वापि श‍ृणोति श्रावयेदपि ॥ ४ ॥

वाचकं तोषयेद्वापि स भवेद् भैरवी तनुः ।
पश्चिमाभिमुखं लिङ्गं वृषशून्यं शिवालयम् ॥ ५ ॥

तत्र स्थित्वा पठेन्नाम्नां सर्वकामाप्तये शिवे ।
भौमवारे निशीथे च अष्टम्यां वा निशामुखे ॥ ६ ॥

माषभक्तबलिं छागं कृसरान्नं च पायसम् ।
मद्यं मीनं शोणितं च दुग्धं मुद्रागुडार्द्रकम् ॥ ७ ॥

बलिं दत्वा पठेत्तत्र कुबेरादधिको भवेत् ।
पुरश्चरणमेतस्य सहस्रावृत्तिरुच्यते ॥ ८ ॥

महाकालसमो भूत्वा यः पठेन्निशि निर्भयः ।

सर्वं हस्तगतं भूयान्नात्र कार्या विचारणा ॥ ९ ॥

मुक्तकेशो दिशावासः ताम्बूलपूरिताननः ।
कुजवारे मध्यरात्रौ होमं कृत्वा श्मशानके ॥ १० ॥

पृथ्वीशाकर्षणं कृत्वा मात्र कार्या विचारणा ।
ब्रह्माण्डगोले देवेशि! या काचिज्जगतीतले ॥ ११ ॥

समस्ता सिद्धयो देवि! वाचकस्य करे स्थिता ।
भस्माभिमन्त्रितं कृत्वाग्रहस्ते च विलेपयेत् ॥ १२ ॥

भस्म संलेपनाद्देवि! सर्वग्रहविनाशनम् ।
वन्ध्या पुत्रप्रदं देवि! नात्र कार्या विचारणा ॥ १३ ॥

गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ।
स्वयोनिरिव गोप्तव्यं न देयं यस्य कस्यचित् ॥ १४ ॥

इति श्रीमहाकालककाराद्यष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ।

Proofread by NA, PSA Easwaran psaeaswaran at gmail.com

*Shri Mahakala Kakaradi Ashtottarashatanama Stotram*
pdf was typeset on September 28, 2019

Please send corrections to *sanskrit@cheerful.com*